बन्धोत्तरसमये ज्येष्ठावस्थानं प्राप्यते । पद्मलेश्यायामष्टाविंशतित एकत्रिंशतं प्राप्तस्य ज्येष्ठा वृद्धिः, एकत्रिंशत एकोनत्रिंशतं प्राप्तस्य ज्येष्ठा हानिः, ज्येष्ठवृद्ध्युत्तरं ज्येष्ठावस्थानं चेति । तदेवं समाप्तमोघादेशाभ्यां ज्येष्ठवृद्धिहान्यवस्थानानां सत्पदनिरूपणम् ॥३२७॥

अथ ओघतो जघन्यवृद्धिहान्यवस्थानानां सत्पदं निरूपयन्नाह—

अत्थि जहराणा तिपया कम्माणं दुइअतुरिअछट्ठाणं ।
जहि जाण गुरुपया अत्थि तत्थ सि लहुपया अत्थि ॥३२८॥

(प्रे०) "अत्थी"त्यादि, ओघतो दर्शनावरणमोहनीयनाम्नामेव जघन्यवृद्धिहान्यवस्थानानि भवन्ति, ज्ञानावरणादिपञ्चानां मूलकर्मणां त्वोघे सर्वमार्गणासु वा ज्येष्ठवृद्धिहान्यस्थानाभाववज्जघन्यवृद्धिहान्यवस्थानानामप्यभावो विज्ञेयः । मार्गणासु दर्शनावरणादितिसृणां जघन्यवृद्ध्यादित्रयाणां पदानां सत्पदमन्वेपणे यासु मार्गणास्वासां तिसृणां प्रकृतीनां ज्येष्ठवृद्धिहान्यवस्थानानि भवन्ति, तासु मार्गणासु तासां जघन्यवृद्धिहान्यवस्थानानि सत्तया ज्ञेयानि । एवं संक्षेपेण सत्पदानां निर्दर्शनम् ।

विशेषभावना पुनरेवम्—ओघतो दर्शनावरणे चतुष्कं बध्नतो यदा षड् बध्नाति तदा जघन्या वृद्धिर्भवति, यदा षड्बन्धस्थानतश्चतुष्कं बध्नाति तदा जघन्या हानिः, अन्यतरबन्धोत्तरक्षणे जघन्यावस्थानं विज्ञेयम् । एवं मनुष्यत्रिक-पञ्चेन्द्रियद्विक-त्रसकायद्विक मनोयोगौघ-तदुत्तरभेदचतुष्क-वचनयोगौघ-तदुत्तरभेदचतुष्क-काययोगौघौ-दारिककाययोग-वेदत्रय-कषायचतुष्क-चक्षुरचक्षुर्दर्शन-शुक्ललेश्या-भव्य-संज्ञ्याहारकमार्गणासु द्वात्रिंशत्सु दर्शनावरणस्य जघन्यवृद्धिहान्यवस्थानपदानि सत्तया प्राप्यन्ते ।

नरकमार्गणाष्टक--तिर्यग्मार्गणाचतुष्का--ऽनुत्तरवर्जपञ्चविंशतिदेवमार्गणा--वैक्रिययोगाऽसंयम-कृष्णादिपञ्चलेश्यामार्गणासु चतुश्चत्वारिंशतौ ज्येष्ठवृद्धिहान्यवस्थानान्येव जघन्यविवक्षायां जघन्यतया विज्ञेयानि, नवबन्धतः षट्, षड्बन्धतो नव बध्नतः क्रमशो जघन्यवृद्धिहान्यवस्थानानि भवन्ति । ज्ञानचतुष्का-ऽवधिदर्शन-संयमौघ-सामायिक-च्छेदोपस्थापनीय-सम्यक्त्वौघौ-पशमिक-क्षायिकसम्यक्त्वमार्गणास्वेकादशसु जघन्यवृद्धिहान्यवस्थानान्योघवत् सत्तया विज्ञेयानि, तान्येव ज्येष्ठवृद्धिहान्यवस्थानान्यपीति ।

शेषास्वपर्याप्तपञ्चेन्द्रियतिर्यगऽपर्याप्तमनुष्या-ऽपर्याप्तपञ्चेन्द्रियाऽपर्याप्तत्रसकाय-पञ्चानुत्तरसुर-सप्तैकेन्द्रिय--नवविकलाक्ष--पृथ्व्यादिपञ्चकायसप्तकैकोनचत्वारिंशद्भेदौ-दारिकमिश्र-वैक्रियमिश्रा-ऽऽहारका-ऽऽहारकमिश्र-कार्मणकाययोगापगतवेदा-ऽज्ञानत्रय-परिहारविशुद्धि-सूक्ष्मसम्पराय-

देशविरत्य-ऽभव्य-क्षायोपशमिकसम्यक्त्व-सम्यग्मिथ्यात्व-सास्वादन-मिथ्यात्वा-ऽसंज्ञि-नाहारकमार्गणासु त्वयोर्वा दर्शनावरणस्य वृद्धिहान्यवस्थानानामेवाभाव इति ।

मोहनीयस्य-ओघे जघन्या वृद्धिरेकविंशतितो द्वाविंशतिं बध्नतो भवति, जघन्या हानिः पञ्चबन्धस्थानतश्चतुष्कं बध्नतो ज्ञेया, अन्यतरबन्धोत्तरकाले जघन्यावस्थानमिति । एवं त्रिमनुष्यादिद्वात्रिंशद्मार्गणास्वोघवद् मोहनीयस्य जघन्यवृद्धिहान्यवस्थानानि सत्तया विज्ञेयानि ।

अष्टनरकभेद-पञ्चविंशतिदेवमार्गणा-वैक्रिययोगा-ऽसंयम-कृष्णनीलकापोतलेश्यामार्गणास्वष्टात्रिंशति मोहस्य जघन्या हानिर्ज्येष्ठहानिवत्पञ्चप्रकृतिरूपा भवति, द्वाविंशतितः सप्तदश प्राप्स्येति । एकविंशतितो द्वाविंशतिं बध्नतो जघन्या वृद्धिर्भवति, जघन्यवृद्धिबन्धोत्तरं जघन्यावस्थानं भवति ।

तिर्यग्मार्गणाचतुष्के जघन्या हानिः सप्तदशतस्त्रयोदश प्राप्तस्य, तेजःपद्मलेश्ययोः सप्तदशतस्त्रयोदश यद्वा त्रयोदशतो नव बध्नतो जघन्या हानिर्भवति । मार्गणाषट्केऽपि जघन्यवृद्ध्यवस्थाने नरकमार्गणावद् बोद्धव्ये ।

मतिज्ञानाद्येकादशमार्गणासु श्रेणौ पञ्चकादिबन्धस्थानतश्चतुष्कादिकं बध्नतो जघन्यहानिः, एकादितो द्व्यादिकं यावच्चतुष्कतः पञ्च प्राप्तस्य जघन्यवृद्धिः, अन्यतरबन्धोत्तरसमये जघन्यावस्थानं प्राप्यते । औदारिकमिश्रवैक्रियमिश्रकार्मणयोगाऽज्ञानत्रिका-ऽनाहारकमार्गणासु सप्तसु हानेरभावाज्जघन्यवृद्ध्यवस्थाने नरकमार्गणावद् भवतः ।

अपगतवेदे चतुष्कादितस्त्र्यादिकम्, एकादितो द्व्यादिकं यावद् त्र्याच्चतुष्कं बध्नतः क्रमाज्जघन्यहानिवृद्धिश्च भवति, अन्यतरबन्धोत्तरं च ह्रस्वावस्थानमिति । क्षयोपशमसम्यक्त्वे सप्तदशभ्यस्त्रयोदश त्रयोदशभ्यो नव बध्नतो जघन्या हानिः, नवभ्यस्त्रयोदश त्रयोदशतः सप्तदश वा बध्नतो जघन्यवृद्धिः, अन्यतरबन्धोत्तरक्षणे च जघन्यावस्थानमिति ।

अपर्याप्तपञ्चेन्द्रियतिर्यगऽपर्याप्तमनुष्या-ऽपर्याप्तपञ्चेन्द्रिया-ऽपर्याप्तत्रसकाय-सर्वैकेन्द्रिय-नवविकलाक्ष-पृथ्व्यादिपञ्चकायसत्केकचत्वारिंशद्भेद-पञ्चानुत्तर-ऽऽहारका-ऽऽहारकमिश्र-परिहारविशुद्धि-देशविरत्यभव्य-सम्यग्मिथ्यात्व सास्वादन मिथ्यात्वा ऽसंज्ञिलक्षणासु त्रिसप्ततिमार्गणासु मोहनीयस्य वृद्धिहान्योरभावात् तज्जघन्यपदानामप्यभावः । सूक्ष्मे मोहबन्धाभावादभाव इति ।

नाम्नो-जघन्यवृद्धिहान्यवस्थानानि सत्तया पुनरेवम्-ओघे सामान्यतो नाम्न एकोनत्रिंशद्बन्धस्थानतस्त्रिंशतं बध्नतो जघन्या वृद्धिः, त्रिंशत एकोनत्रिंशतं बध्नतो जघन्या हानिरन्यतरबन्धोत्तरक्षणे च जघन्यावस्थानं प्राप्यते । विशेषत एकत्रिंशद्बन्धतो मरणव्याघातेन त्रिंशतं बध्नतो जघन्या हानिः, त्रिंशद्बन्धाज्जिननामप्रारम्भेणैकत्रिंशतं बध्नतो जघन्या वृद्धिरन्यतर-

बन्धोत्तरक्षणे च जघन्यावस्थानमिति । अयमत्र भावार्थः-ओघे बन्धत एकप्रकृतेर्वृद्धिहानितो जघन्यवृद्धिहानी भवतः ।

अथ मार्गणासु आनताद्यष्टादशदेवमार्गणाऽपगतवेद-सूक्ष्मसम्पराय-सम्यग्मिथ्यात्वमार्गणास्वेकविंशतौ नाम्नो जघन्यवृद्धिहान्यवस्थानानि न सन्ति, तद्भूयस्काराल्पतरयोरभावात् । आहारकयोगद्वये देशविरतौ च नाम्नो जघन्यवृद्धिरष्टाविंशतिं बध्नतो जिननामबन्धारम्भे एकोनत्रिंशतं प्राप्तस्य भवति, तदुत्तरं च जघन्यावस्थानम्, एते एव ज्येष्ठवृद्ध्यवस्थानरूपे अपि बोध्ये । हानिस्त्वत्र नास्त्यल्पतरबन्धाभावात् । मनःपर्यवज्ञान-संयमौघ-सामायिक-च्छेदोपस्थापनीय-परिहारविशुद्धिमार्गणासु पञ्चसु त्रिंशद्बन्धस्थानत एकत्रिंशतं बध्नतो जघन्या वृद्धिर्भवति, एकत्रिंशद्बन्धत आहारकद्विकबन्धविरामे एकोनत्रिंशतं बध्नतो जघन्या हानिर्जायते, जघन्यवृद्ध्युत्तरं जघन्यावस्थानमिति ।

अष्टनरकभेद-पञ्चतिर्यग्भेद मनुष्यभेदचतुष्क देवौघादिसहस्रारान्तद्वादशदेवभेदै-कोनविंशतीन्द्रियभेद-द्वाचत्वारिंशत्कायभेदा-ऽऽहारकद्विकवर्जषोडशयोगभेद-वेदत्रय-कषायचतुष्का-ऽज्ञानत्रिका-ऽसंयम-चक्षुरचक्षुर्दर्शन-कृष्णादिलेश्यापञ्चक-भव्याभव्य-सास्वादन-मिथ्यात्व-संज्ञ्यसंज्ञ्याहारकानाहारकमार्गणासु द्वात्रिंशदुत्तरशते तिर्यक्प्रायोग्यमेकोनत्रिंशतं बद्ध्वा उद्योतसहितं त्रिंशतं बध्नतो जघन्या वृद्धिर्भवति, तद्बन्धविरामे एकोनत्रिंशतं बध्नतो जघन्या हानिर्भवति, अन्यतरबन्धोत्तरक्षणे च जघन्यावस्थानमित्योघवद् भावनीयम् । ज्ञानत्रिका-ऽवधिदर्शन शुक्ललेश्या-सम्यक्त्वौघ-क्षयोपशम-क्षायिकौ-पशमिकसम्यक्त्वमार्गणासु नवस्वेकत्रिंशद्बन्धतो मरणव्याघातेन त्रिंशतं बध्नतो जघन्या हानिः, त्रिंशद्बन्धाज्जिननामप्रारम्भेणैकत्रिंशतं बध्नतो जघन्या वृद्धिः, अन्यतरबन्धोत्तरक्षणे च जघन्यावस्थानमिति । समाप्तमोघत आदेशतश्च जघन्यवृद्धिहान्यवस्थानानां सत्पदनिरूपणम्, तत्समाप्तौ च गतं पदनिक्षेपे प्रथमं सत्पदद्वारनिरूपणम् ।।३२८।।

।। श्री प्रेमप्रभाटीकासमलङ्कृते बन्धविधाने उत्तरप्रकृतिबन्धे चतुर्थे पदनिक्षेपाधिकारे स्वस्थाननिरूपणाया प्रथमं सत्पदद्वारं समाप्तम् ।।



अथ मार्गणासु स्वामिनो निरूपयिषुरादौ दर्शनावरणस्य दर्शयन्नाह—

चउणाणसंजमेसुं समइयछेओहिसम्मखइएसुं ।
तहुवसमे छ चउत्रो बंधंतो बीअकम्मस्स ॥३३२॥
गुरुवड्ढि विवरीओ गुरुहाणिं कुणइ गुरुमवट्ठाणं ।
अण्णयरो सेसासुं तिगुरुपयाणऽत्थि ओघव्व ॥३३३॥

(प्रे०) "चउणाणे"त्यादि, यासु मार्गणासु नव बन्धस्थानस्याभावस्तथा चतुर्विधं षड्विधं चेति बन्धस्थानद्वयं भवति; तासु मतिज्ञानाद्येकादशमार्गणासु य उपशमश्रेणौ चतुष्क-बन्धकः श्रेणितोऽवरोहन् निद्राद्विकप्रारम्भे निद्राद्विकेन सह षट् प्रकृतीर्बध्नाति, सोऽपूर्वकरणगुण-स्थानकस्थो निद्राद्विकप्रारम्भप्रथमसमय उक्तैकादशस्वपि ज्येष्ठवृद्धेः स्वामी भवति, यद्वा ज्ञान-त्रिका-वधिदर्शन-सम्यक्त्वौघ-क्षायिकौपशमिकसम्यक्त्वमार्गणासु सप्तसु श्रेणावपूर्वकरणादिगुण-स्थानकत्रये चतुष्कं बध्नन् कालं कृत्वा स्वर्गे समुत्पन्नः षड्विधं बध्नाति तत्प्रथमसमये चतुर्थ-गुणस्थानकस्थो देवोऽपि ज्येष्ठवृद्धेः स्वामी भवति। मनःपर्यवज्ञान-संयमौघ-सामायिकच्छेदोप-स्थापनीयेषु तु देवस्य स्वामित्वं नैव वाच्यम्, मरणानन्तरमुक्तमार्गणानामेव विनाशात्। एका-दशस्वपि मार्गणास्वन्यतरश्रेणावारूढो योऽपूर्वकरणगुणस्थानकप्रथमभागान्ते निद्राद्विकं बन्धतो विच्छिनत्ति स षड्विधबन्धाच्चतुष्कं बध्नन् तत्प्रथमसमये ज्येष्ठहानेः स्वामी द्रष्टव्यः। यो ज्येष्ठवृद्धिहान्योः स्वामी स एव तदुत्तरसमये वर्तमानो ज्येष्ठावस्थानस्य स्वामी ज्ञेयः।

शेषमार्गणासु ज्येष्ठवृद्धिहान्यवस्थानस्वामिन ओघवद्भवन्ति, शेषमार्गणा नामत इमाः— अष्टनरकभेद--तिर्यग्भेदचतुष्क--देवौघादिनवमग्रैवेयकान्तपञ्चविंशतिदेवभेद-वैक्रियययोगा-ऽसंयम-कृष्णादिपञ्चलेश्यामार्गणाश्चतुश्चत्वारिंशत्। तथा मनुष्यत्रिक-पञ्चेन्द्रियद्विक-त्रसकायद्विक-मनो-योगौघतदुत्तरभेदचतुष्क-वचनयोगौघ-तदुत्तरभेदचतुष्क-काययोगौघौ-दारिकयोग-वेदत्रय-कषाय-चतुष्कचक्षुरचक्षुर्दर्शन-शुक्ललेश्या-भव्य-संज्ञ्याहारकमार्गणाः द्वात्रिंशत्।

अत्र नरकौघादिचतुश्चत्वारिंशद्मार्गणासु प्रकृतिचतुष्करूपबन्धस्थानस्याभावेन बन्धस्थानद्वय-स्यैव भावादधिकप्रकृत्यात्मकबन्धस्थानान्न्यूनप्रकृत्यात्मकं बध्नतो हानिः, न्यूनप्रकृत्यात्मकबन्ध-स्थानादधिकप्रकृत्यात्मकं बध्नतो वृद्धिः, अन्यतरबन्धोत्तरसमये च ज्येष्ठावस्थानमिति। विशेष-भावना त्वोघानुसारेण मार्गणागतप्रकृष्टगुणस्थानकमवधार्य कार्येति। अपर्याप्तपञ्चेन्द्रियतिर्यगा-दित्र्यशीतिमार्गणासु दर्शनावरणस्यैकैकबन्धस्थानस्य भावेन प्रस्तुतप्ररूपणैव न सम्भवतीति सत्पदद्वारतो गतमेव ॥३३२-३३३॥

अथ मार्गणासु मोहनीयस्य ज्येष्ठवृद्धिहान्यवस्थानस्वामिनो निरूरूपयिषुरादौ यासु ते ओघवद् भवन्ति तासु तानतिदेशेन प्राह--

तिगुरुपयाणोघव्व उ मोहस्स दुतसपणिंदिकायेसुं ।
लोहणयणियरसुक्काभविसएणीसु तह आहारे ॥३३४॥

(प्रे०) "तिगुरु"इत्यादि, पञ्चेन्द्रियौघ-पर्याप्तपञ्चेन्द्रिय-त्रसकायौघ-पर्याप्तत्रसकाय-काययोगौघ-लोभकषाय-चक्षुरचक्षुर्दर्शन-शुक्ललेश्या-भव्य-संज्ञ्याहारकमार्गणासु द्वादशसु मोहनीयस्य ज्येष्ठवृद्धिहान्यवस्थानानां स्वामिन ओघवद् भवन्ति, यतो यासु (१) प्रथमादिनवमान्तगुणस्थानानां सर्वबन्धस्थानानाञ्च सम्भवः, (२) श्रेणौ कालं कृत्वा दिवि समुत्पन्नानामपि मार्गणाया अविच्छेदश्चः, तास्वोघवत् त्रयाणां पदानां स्वामित्वं प्राप्यतेऽतो भावनाऽपि सर्वथा ओघवत्कार्येति, न पुनः कश्चिद्विशेषत इति ॥३३४॥

अथ नरकादिमार्गणासु ज्येष्ठवृद्ध्यादीनां स्वामित्वं प्राह--

सव्वनिरयसुरआनवगेविज्जविउवअजयकुलेसासुं ।
बंधंतो बावीसं सत्तरसाओ गुरुं वड्ढिं ॥३३५॥
कुणए तिरितिपणिंदियतिरियेसुं तेरसाउ बावीसं ।
तिणरपणमणवयउरलतिवेअतेउपउमासु उ णवाओ ॥३३६॥ (गीतिः)
मीसदुगजोगकम्मणातिअणाणेसुं तहा अणाहारे ।
इगवीसाउ दुवीसं बंधंतो इगहियमवेए ॥३३७॥
मणणाणसंजमेसुं समइअछेएसु णव पणाहिन्तो ।
बंधंतो गुरुवड्ढिं सत्तरस उ वेअगे नवगा ॥३३८॥
गुरुहाणिं विवरीओ सगसट्ठीअ णिरयाइगेसुं तु ।
कुणइ गुरुमवट्ठाणं चउसयरीए वि अणणयरो ॥३३९॥

(प्रे०) "सव्वे"त्यादि, अष्टौ नरकभेदाः, अनुत्तरवर्जपञ्चविंशतिदेवभेदाः, वैक्रियकाययोगा-ऽसंयमा-ऽशुभलेश्यामार्गणाश्चेति अष्टात्रिंशद्मार्गणासु मोहनीयस्य ज्येष्ठां वृद्धिं यश्चतुर्थगुणस्थानात्प्रथमगुणस्थानं प्राप्तः स प्रथमगुणस्थानप्रथमसमये सप्तदशबन्धाद् द्वाविंशतिं बध्नन्

करोति, वैपरीत्येन प्रथमगुणस्थानाच्चतुर्थं प्राप्तस्तत्प्रथमसमये द्वाविंशतिबन्धात्सप्तदश बध्नञ्ज्येष्ठहानेः स्वामी ज्ञेयः, ज्येष्ठवृद्धिहान्यन्यतरबन्धोत्तरसमये वर्तमानो ज्येष्ठावस्थानस्य स्वामी द्रष्टव्य इति ।

तिर्यगोघ-पञ्चेन्द्रियतिर्यगोघ-पर्याप्तपञ्चेन्द्रियतिर्यक्-तिरश्चीमार्गणासु चतसृषु पञ्चमगुणात्प्रथमं प्राप्तः प्रथमगुणस्थानप्रथमसमये त्रयोदशभ्यो द्वाविंशतिं बध्नञ्ज्येष्ठवृद्धेः स्वामी भवति। वैपरीत्येन प्रथमगुणस्थानात्पञ्चमगुणस्थानं प्राप्तस्य तत्प्रथमसमये द्वाविंशतिबन्धात् त्रयोदशबन्धं प्राप्तस्य ज्येष्ठहानेः स्वामित्वं भवति, ज्येष्ठवृद्धिहान्यन्यतरबन्धकस्तदुत्तरसमये ज्येष्ठावस्थानबन्धस्य स्वामी विज्ञेयः ।

मनुष्यत्रिक-मनोयोगौघ-तदुत्तरभेदचतुष्क-वचनयोगौघ--तदुत्तरभेदचतुष्कौ--दारिकयोग-पुरुषस्त्रीनपुंसकवेद- तेजःपद्मलेश्यामार्गणास्वेकोनविंशतौ प्रथमगुणस्थानात् षष्ठं सप्तमं वा गुणस्थानं प्राप्तस्तत्प्रथमसमये द्वाविंशतेर्बन्धान्नव बध्नञ्ज्येष्ठहानेः स्वामी भवति, षष्ठगुणस्थानात्प्रथमगुणस्थानं प्राप्तस्तत्प्रथमसमये नवभ्यो द्वाविंशतिं बध्नञ्ज्येष्ठवृद्धेः स्वामी भवति, ज्येष्ठवृद्धिहान्यन्यतरबन्धकस्तदुत्तरसमये ज्येष्ठावस्थानस्य स्वामी ज्ञातव्य इति ।

औदारिकमिश्र-वैक्रियमिश्र-कार्मणयोगा-ऽज्ञानत्रिका-ऽनाहारकमार्गणासु सप्तसु द्वितीयगुणस्थानात्प्रथमगुणस्थानं प्राप्तस्तत्प्रथमसमय एकविंशतिबन्धाद् द्वाविंशतिं बध्नञ्ज्येष्ठवृद्धेः स्वामी बोद्धव्यः, तदुत्तरक्षणे च ज्येष्ठावस्थानस्येति । हानेरेवात्राभावान्न तत्स्वामित्वस्य निरूपणमिति ।

अपगतवेदमार्गणायामनिवृत्तिकरणस्थो यदैकां बध्नन् द्वे प्रकृती बध्नाति यद् वा द्वे बध्नन् तिस्रः बध्नाति यद्वा तिस्रो बध्नश्चतस्रो बध्नाति तदा ज्येष्ठवृद्धेः स्वामी भवति । यदा पुनः चतस्रो बध्नन् तिस्रो बध्नाति यद्वा तिस्रो बध्नन् द्वे बध्नाति यद्वा द्वे बध्नन्नेकां प्रकृतिं बध्नाति तदा ज्येष्ठहानेः स्वामी ज्ञेयः । ज्येष्ठवृद्धिहान्यन्यतरबन्धोत्तरक्षणवर्तिज्येष्ठावस्थानस्य स्वामी भावनीयः । अपगतवेदे जघन्यवृद्ध्यादीनामप्ययमेव स्वाम्यवधार्य इति ।

मनःपर्यवज्ञान-संयमौघ-सामायिक-च्छेदोपस्थापनीयसंयमरूपासु चतसृषु मार्गणासु श्रेणितोऽवरोहन् नवमगुणस्थानादष्टमगुणस्थानं प्राप्तः तत्प्रथमसमये पञ्चबन्धान्नव बध्नाति स ज्येष्ठवृद्धेः स्वामी भवति । श्रेणिमारोहन्नष्टमगुणस्थानान्नवमगुणस्थानं प्राप्तः तत्प्रथमसमये नवभ्यः पञ्च बध्नञ्ज्येष्ठहानेः स्वामी भवति । अन्यतरबन्धस्योत्तरक्षणवर्ती ज्येष्ठावस्थानस्य स्वामी ज्ञेयः ।

क्षयोपशमसम्यक्त्वे षष्ठगुणस्थानकाच्चतुर्थं प्राप्तस्तत्प्रथमसमये नवभ्यः सप्तदश बध्नञ्ज्येष्ठवृद्धेः स्वामी भवति, वैपरीत्येन चतुर्थगुणस्थानात् षष्ठं सप्तमं वा गुणस्थानं गतस्तत्प्रथमसमये सप्तदशभ्य नव बध्नञ्ज्येष्ठहानिं निर्वर्तयति, ज्येष्ठवृद्धिहान्यन्यतरबन्धनिर्वर्तनोत्तरक्षणे

तावन्तमेव बन्धं निर्वर्तयञ्ज्येष्ठावस्थानं विदधाति । अत्र गाथाचतुष्केण ज्येष्ठवृद्धेः स्वामिनश्चतुः-सप्ततिमार्गणासु दर्शिताः, तास्य औदारिकमिश्रादिसप्तमार्गणा विहाय सप्तषष्टिमार्गणासु पञ्चम-गाथापूर्वार्धेन ज्येष्ठहानेः स्वामिनो निरूपिताः । चतुःसप्ततिमार्गणास्वपि पञ्चमगाथाया उत्तरार्धेन ज्येष्ठावस्थानस्य स्वामिनः कथिताः ॥३३५-३३९॥

अथ शेषमार्गणासु मोहनीयस्य प्रस्तुतं निरूपयन्नाह—

गुरुदुपयाणोघव्व उ निणाणाऽवहिसम्मखइउवसमेसु ।
कुणए बंधंतो णव सत्तरसाओ गुरुं हाणिं ॥३४०॥
कोहे णरव्व तिपया गुरू अहव वि चउगा उ सत्तरस ।
बंधंता गुरुवुड्ढि से काले वि गुरुमवठाणं ॥३४१॥
सत्तर निदुगाउ कमा बंधंतो कुणइ माणमायासुं ।
गुरुवड्ढि से कालेऽवठाणमोघव्व हाणीए ॥३४२॥

(प्रे०) "गुरु" इत्यादि, मतिश्रुतावधिज्ञानावधिदर्शनसम्यक्त्वौपक्षायिकौपशमिकसम्य-क्त्वेषु सप्तसु गुरुवृद्ध्यवस्थानस्वामिनो ओघवद् भवतः, ओघोक्तस्वामिनामेवात्र लाभात्; श्रेणौ एकां प्रकृतिं बध्नतः कालं कृत्वा देवेषूत्पन्नस्य ज्येष्ठवृद्धेस्तदुत्तरसमये च ज्येष्ठावस्थानस्य लाभात् । चतुर्थगुणस्थानात् षष्ठं सप्तमं वा गुणस्थानकं प्राप्तस्तत्प्रथमसमये सप्तदशबन्धस्थानान्नव बध्न-ञ्ज्येष्ठहानेः स्वामी ज्ञातव्यः ।

क्रोधमार्गणायां ज्येष्ठवृद्धेः स्वामी प्रकारद्वयेन प्राप्यते, एकस्तावत् षष्ठगुणस्थानात् प्रथमगुणस्थानं गतः तत्प्रथमसमये नवबन्धस्थानाद् द्वाविंशतिं बध्नन् त्रयोदशप्रकृतिरूपां ज्येष्ठवृद्धिं करोति, अन्यस्तु श्रेणिगतश्चतस्रः प्रकृतीर्बध्नन् कालं कृत्वा दिवि समुत्पन्नो देवभव-प्रथमसमये चतुर्थगुणस्थानप्रथमसमयरूपे वर्तमानः सप्तदश बध्नन् त्रयोदशप्रकृतिरूपां ज्येष्ठां वृद्धिं करोति । प्रथमगुणस्थानकात् षष्ठं सप्तमं वा गुणस्थानं प्राप्तस्तत्प्रथमसमये द्वाविंशते-र्बन्धस्थानान्नवबन्धस्थानं गतो ज्येष्ठां हानिं करोति । ज्येष्ठवृद्धिप्रकारद्वयोत्तरं ज्येष्ठहान्युत्तरं च ज्येष्ठावस्थानं करोतीति स एव स्वाम्यवसेयः ।

मानमार्गणायां नवमगुणस्थाने मोहनीयस्य तिस्रः प्रकृतीर्बध्नन् कालं कृत्वा दिवि समुत्पन्नश्चतुर्थगुणस्थानप्रथमसमये देवभवप्रथमसमयरूपे सप्तदश बध्नञ्ज्येष्ठवृद्धिं करोति, तद्-नन्तरक्षणे च ज्येष्ठावस्थानस्वामी भवति, ज्येष्ठहानेः स्वामी ओघवद् भवति, ओघोक्तस्वामिना-मत्र प्रवेशात् ।

मायामार्गणायां नवमगुणस्थाने मोहनीयस्य द्वे प्रकृती बध्नन् यः कालं कृत्वा नाकितया समुत्पन्नश्चतुर्थगुणस्थानप्रथमसमये देवभवप्रथमसमयरूपे सप्तदश बध्नाति स ज्येष्ठवृद्धिं करोति, तदुत्तरक्षणे च ज्येष्ठावस्थानं स एव निर्वर्तयति। ज्येष्ठहानेः स्वाम्योघवद् भवति, ओघोक्तस्वामिनामत्र प्रवेशात्।

तदेवं गाथानवकेन मोहनीयस्य ज्येष्ठवृद्धिहान्यवस्थानानां स्वामिनः षण्णवतिमार्गणासु दर्शिताः, सूक्ष्मसम्पराये मोहनीयस्य बन्धाभावाच्छेषास्वपर्याप्तपञ्चेन्द्रियतिर्यगादिमार्गणासु त्रिसप्ततौ मोहनीयस्य बन्धभावेऽपि तस्य भूयस्काराल्पतरबन्धाभावेन प्रस्तुतत्रयाणां पदानामभावान्न तत्स्वामित्वनिरूपणमिति।

शेषमार्गणा नामत इमाः—अपर्याप्तपञ्चेन्द्रियतिर्यगपर्याप्तमनुष्याऽपर्याप्तपञ्चेन्द्रियाऽपर्याप्तत्रसकाय-सप्तैकेन्द्रिय--नवविकलाक्ष-पृथिव्यादिपञ्चकायसत्कैकोनचत्वारिंशद् भेद-पञ्चानुत्तरा-ऽऽहारका-ऽऽहारकमिश्र-परिहारविशुद्धि-देशविरत्य-भव्य-सम्यग्मिथ्यात्व-सास्वादन-मिथ्यात्वाऽसंज्ञिमार्गणा इति। तदेवं गतं मोहनीयस्य ज्येष्ठवृद्ध्यादित्रयाणां पदानां स्वामित्वम् ॥३४०-३४२॥

अथ नामकर्मणो ज्येष्ठवृद्ध्यादिपदानां स्वामित्वं मार्गणासु निरूपयन्नादौ यासु तदोघवद् भवतिः तासु प्राह—

तिणरदुपणिंदितसपणमणवयकायुरलथीणपुंसुं से।
पुरिसचउकसायेसुं णाणचउगसंजमेसुं च ॥३४३॥
समइअछेअतिदरिसणसुक्कभवियसम्मखइउवसमेसुं।
सण्णिम्मि तहाहारे णामस्सोघव्व जेट्ठतिपयाणं ॥३४४॥ (गीतिः)

(प्रे०) "तिणरे"त्यादि, मनुष्यत्रिकादित्रिचत्वारिंशद्मार्गणासु नाम्नो ज्येष्ठवृद्धिहान्यवस्थानानां स्वामिन ओघवद् विज्ञेयाः, यत एतासु सर्वास्वारोहकावरोहकापूर्वकरणस्थानां सद्भावः, अपूर्वकरणस्थानामेवौघे प्रस्तुते च नाम्नो ज्येष्ठवृद्धिहान्यवस्थानानि भवन्ति। उक्तेतरमार्गणास्वपूर्वकरणगुणस्थानस्यैवाभावान्नौघवत् स्वामित्वलाभ इति ॥३४३-३४४॥

अथ लाघवार्थं व्युत्क्रमेण परिहारविशुद्ध्यादिमार्गणात्रये प्राह—

णामस्स एगतीसं परिहारे पम्हवेअगेसुं च।
कुणए अडवीसाओ बंधंतो वड्ढिमुक्कोसं ॥३४५॥

कुणइ गुरुमवट्ठाणं गुरुवड्ढिअणंतरं गुरुं हाणिं ।
बंधंतो अडवीसं तीसिगतीसा व गुणतीसं ॥३४६॥

(प्रे०) "णामस्से"त्यादि, परिहारे पद्मलेश्यायां क्षयोपशमसम्यक्त्वे च प्रमत्तसंयताद्प्रमत्तसंयतगुणस्थानगमने तत्प्रथमसमये यद्वाऽप्रमत्तसंयतः स्वस्थान एव देवप्रायोग्यामष्टाविंशतिं बद्ध्वा तदनन्तरसमये जिननामाऽऽहारकद्विकबन्धप्रारम्भादेकत्रिंशतं बध्नञ्ज्येष्ठवृद्धेः स्वामी भवति । उक्तमार्गणात्रयेऽष्टाविंशत्यादीन्येकत्रिंशत्पर्यंतानि चत्वारि बन्धस्थानानि भवन्ति, अत उक्तप्रकारेणैवाप्रमत्तसंयतो ज्येष्ठवृद्धेः स्वाम्यवधार्यः । तदनन्तरसमये स एवाप्रमत्तसंयतो ज्येष्ठावस्थानस्य स्वामी भवति । ज्येष्ठहानेः स्वामी तु योऽप्रमत्तसंयत एकत्रिंशतं बध्नाति स एव प्रमत्तगुणं प्राप्त आहारकद्विकं विहाय एकोनत्रिंशतं प्रमत्तगुणस्थानकप्रथमसमये बध्नाति तदा स ज्येष्ठहानेः स्वामी भवति, यद् वाऽप्रमत्तसंयत आहारकद्विकेन सह त्रिंशतं बध्नन् यदा षष्ठं गुणस्थानं प्राप्नोति तदाऽष्टाविंशतिं बध्नातीति प्रमत्तसंयतप्रथमसमये ज्येष्ठहानेः स्वामी भवति । अत्र ज्येष्ठहानौ प्रकृतिद्वयस्य हानिः, वृद्धौ च प्रकृतित्रयस्य वृद्धिः, अतो ज्येष्ठवृद्धेरुत्तरं ज्येष्ठावस्थानस्वामित्वं भावनीयमिति ॥३४५-३४६॥

अथ मार्गणान्तरेषु तन्निरूपयन्नाह--

कुणइ सयलणिरयेसुं तइआइगअट्ठमंतदेवेसुं ।
गुरुवुड्ढि बंधंतो तीसं एगूणतीसाओ ॥३४७॥
सुरईसाणंतविउवदुगतेऊसुं कुणइ णामस्स ।
गुरुवड्ढि बंधंतो तीसं खलु पंचवीसाओ ॥३४८॥
आहारदुगे देसे बंधंतो ऊणतीसमडवीसा ।
कुणए जेट्ठं वुड्ढि सासाणो तीसमडवीसा ॥३४९॥
तेवीसाओ तीसं बंधंतोऽणाणासु सव्वहेआसुं ।
विवरीओ गुरुहाणिं अणायरो गुरुमवट्ठाणं ॥३५०॥

(प्रे०) "कुणई"त्यादि, अष्टनरकमार्गणासु तृतीयाद्यष्टमान्तदेवमार्गणासु च मिथ्यादृष्टिः सास्वादनो वा तिर्यक्प्रायोग्यैकोनत्रिंशतं बध्नन् यदा उद्योतनामसहितं त्रिंशतं बध्नाति तदा स ज्येष्ठवृद्धेः स्वामी भवति, यदा पुनर्मिथ्यादृष्टिः सास्वादनो वा तिर्यक्प्रायोग्यं त्रिंशतं बध्नन्नुद्योतबन्धविरामात्तं विहायैकोनत्रिंशतं बध्नाति तदा स एकोनत्रिंशद्बन्धं

कुर्वन् तत् प्रथमसमये ज्येष्ठां हानिं करोति, अत्र वृद्धिर्वा हानिर्वा एकप्रकृतिरूपा भवति, तेन ज्येष्ठपदे जघन्यपदे च स्वामिनां तुल्यत्वं भावनीयम् । वृद्धिहान्यन्यतरबन्धोत्तरसमये ज्येष्ठावस्थानं करोतीति । विशेषत आद्यनरकत्रये ज्येष्ठवृद्धेः स्वामी जिननामसत्ताकः क्षयोपशमसम्यग्दृष्टिः सम्यक्त्वलाभप्रथमसमये वर्तमानोऽपि विज्ञेय इति ।

देवौघभवनपतिव्यन्तरज्योतिष्कसौधर्मेशानदेववैक्रिययोगतन्मिश्रयोगतेजोलेश्यामार्गणासु नवसु नाम्नः पञ्चविंशतिषड्विंशत्येकोनत्रिंशत्त्रिंशद्रूपाणि चत्वारि बन्धस्थानानि भवन्ति; तेजोलेश्यायामेकत्रिंशदपि, तत्र देवानां मिथ्यादृष्टीनां पञ्चविंशतिबन्धस्थानात् त्रिंशद्बन्धस्थानं प्राप्तानां तत्प्रथमसमये ज्येष्ठा वृद्धिर्भवति, एवं मिथ्यादृष्टिदेवास्त्रिंशद्बन्धस्थानात्पञ्चविंशतिं प्राप्तास्तत्प्रथमसमये ज्येष्ठां हानिं कुर्वन्ति । ज्येष्ठवृद्धिहान्यन्यतरबन्धोत्तरसमये तावतीरेव बध्नञ्ज्येष्ठावस्थानं करोतीति । तेजोलेश्यायामप्रमत्तसंयतस्यैकत्रिंशद्बन्धस्थानस्य लाभेऽपि न तत्र ज्येष्ठवृद्धिसम्भवः, यतोऽष्टाविंशत्यादिभ्य एव तत्र गमनेन प्रकृतित्रयस्यैव प्रकृष्टवृद्धिभावात् ।

आहारका-ऽऽहारकमिश्रदेशविरतिमार्गणासु नाम्नोऽष्टाविंशतिं बध्नञ्जिननामबन्धारम्भे एकोनत्रिंशतं बध्नाति तदा स तत्प्रथमसमये ज्येष्ठवृद्धेः स्वामी भवति, तदुत्तरसमये च तस्य ज्येष्ठावस्थानं भवति । अत्रा-ऽऽहारकद्विकमार्गणायां प्रमत्तसंयतो देशविरतौ पञ्चमगुणस्थानस्थः स्वामी भवति, अतो हानिस्त्वत्र नास्तीति ।

सास्वादनमार्गणायां नाम्नोऽष्टाविंशतिं देवप्रायोग्यां बध्नन् त्रिंशतं तिर्यग्योग्यं बध्नाति तदा तत्प्रथमसमये तिर्यग्मनुष्यो वा ज्येष्ठवृद्धेः स्वामी भवति । त्रिंशद्बन्धादष्टाविंशतिं प्राप्तस्तिर्यग्मनुष्यो वा ज्येष्ठहानेः स्वामी ज्ञेयः, ज्येष्ठवृद्धिहान्यन्यतरबन्धोत्तरसमये तावतीरेव बध्नञ्ज्येष्ठावस्थानं करोतीति ।

उक्तशेषासु सर्वतिर्यग्मार्गणा-ऽपर्याप्तमनुष्य--सप्तैकेन्द्रिय--नवविकलाक्षा-ऽपर्याप्तपञ्चेन्द्रियपृथिव्यादिपञ्चकायसत्कैकोनचत्वारिंशद्भेदा--ऽपर्याप्तत्रसकायौदारिकमिश्र--कार्मणयोगाऽज्ञानत्रिका-ऽसंयम-कृष्णनीलकापोतलेश्या-ऽभव्य-मिथ्यात्वा-ऽसंज्ञ्य-नाहारकमार्गणासु षट्सप्ततौ त्रयोविंशतिबन्धात् त्रिंशतं बध्नन् मिथ्यादृष्टिर्ज्येष्ठवृद्धेः स्वामी ज्ञेयः । त्रिंशतं बध्नन् त्रयोविंशतिं बध्नाति तदा स ज्येष्ठहानेः स्वामी भवति । अन्यतरबन्धोत्तरसमये तावतीरेव बध्नञ्ज्येष्ठावस्थानस्य स्वामी विज्ञेयः । आनताद्यष्टादशदेवभेदा-पगतवेद-सूक्ष्मसम्पराय-सम्यग्मिथ्यात्वमार्गणास्वेकविंशतौ नाम्नो भूयस्काराल्पतरबन्धयोरभावान्न प्रस्तुतस्वामित्वप्ररूपणेति ॥३४७-३५०॥ तदेवं पदनिक्षेपद्वारे ओघतो मार्गणासु च स्वस्थाने ज्येष्ठवृद्धिहान्यवस्थानानां स्वामित्वनिरूपणं समाप्तम् ।

अथ ओघतस्त्रयाणां जघन्यपदनिक्षेपस्वामित्वं निरूपयन्नाह—

बीअस्स चऊहिन्तो बंधंतो छ कुणए लहुं वुड्ढिं ।
विवरीओ लहुहाणिं अरणयरो लहुमवट्ठाणं ॥३५१॥
बंधंतो एगहियं चउत्थछट्ठाणऽणंतरे पुव्वा ।
वड्ढि लहुमेगूणं हाणिमवट्ठाणमरणयरो ॥३५२॥

(प्रे०) "बीअस्से"त्यादि, दर्शनावरणे चतुष्प्रकृत्यात्मकं बन्धस्थानं बध्नन् श्रेणिगतस्ततोऽवतरन् कालं वा कुर्वन् षड् बध्नाति, तदा तद्बन्धप्रथमसमयेऽपूर्वकरणस्थो देवभवप्रथमसमयेऽविरतसम्यग्दृष्टिर्वा जघन्यवृद्धिं करोति । श्रेणिमारोहन्नपूर्वकरणे षड्बन्धस्थानं विहाय चतस्रो बध्नन् तत्प्रथमसमये जघन्यां हानिमुपशमकः क्षपको वाऽपूर्वकरणस्थः करोति । जघन्यवृद्धिहान्यन्यतरबन्धोत्तरक्षणे वर्तमानो जघन्यावस्थानं करोति ।

मोहनीये नामकर्मणि च विवक्षितसमये बध्यमानबन्धस्थानेभ्यस्तदुत्तरसमये यदैकप्रकृत्याऽधिकं बन्धस्थानं बध्नाति, तदा स जघन्यवृद्धेः स्वामी भवति, यदि पुनर्विवक्षितसमये बध्यमानबन्धस्थानेभ्यस्तदुत्तरसमय एकप्रकृत्या हीनं बन्धस्थानं बध्नाति तदा स जघन्यहानेः स्वामी भवति । जघन्यवृद्धिहान्योरन्यतरबन्धोत्तरसमये च तस्य जघन्यावस्थानं प्राप्यत । इति द्वितीयगाथाशब्दार्थः । भावार्थः पुनरयम्–मोहनीये एकं द्वे त्रीणि चत्वारि वा बन्धस्थानं बध्नन् नवमगुणस्थानगतः श्रेणितोऽवरोहन् क्रमेण द्वे त्रीणि चत्वारि पञ्च वा बन्धस्थानं यदा बध्नाति तदा जघन्यवृद्धेः स्वामी भवति, तथा सास्वादन एकविंशतिं बध्नन् मिथ्यात्वं प्राप्तो द्वाविंशतिं बध्नाति तदा द्वाविंशतिबन्धप्रथमसमये स जघन्यवृद्धेः स्वामी भवति, एवं च मोहनीयस्य नवमगुणस्थानकस्थः प्रथमगुणस्थानगतो वा जघन्यवृद्धेः स्वामी ज्ञेयः, यत्र प्रथमद्वितीयगुणस्थानद्वयं नास्ति तत्र केवलं नवमगुणस्थानगतस्तत्स्वामी भवति, यत्र पुनः प्रथमद्वितीयगुणस्थानयोर्भावेऽपि नवमगुणस्थानस्याभावस्तत्र प्रथमगुणस्थानस्थः स्वामी भवति । यासु पुनः प्रथमनवमगुणस्थानयोरभावस्तत्रौघोक्ता जघन्यवृद्धिर्न प्राप्यते, तत्र वृद्धिसद्भावे मार्गणाप्रायोग्या जघन्या वृद्धिस्तत्स्वामिनश्चाऽवसेया इति ।

मोहनीयस्यैव पञ्च चत्वारि त्रीणि द्वे वा बन्धस्थानं बध्नन् तदुत्तरसमये क्रमाच्चत्वारि त्रीणि द्वे एकं बन्धस्थानं बध्नाति तदाऽनिवृत्तिकरणे श्रेणावारोहकतया वर्तमानो जघन्यहानेः स्वामी भवति, मार्गणासु याद्युक्तप्रकारेण स्वामी नोपलभ्यते तासु जघन्या हानिरोघत अधिका भवतीति ।

जघन्यावस्थानस्वामितया ये जघन्यवृद्धिं वा जघन्यहानिं वा कुर्वन्ति तदुत्तरसमये

समयः, षष्ठमप्तमनवमगुणस्थानके कस्यचित् सकृदेव संख्येयगुणहानेः सम्भवः, उक्तगुणस्थानगतानां मरणं विमुच्य जघन्यकालोऽप्यन्तर्मुहूर्तमिति प्रस्तुते तत्कालस्य समयतोऽधिकस्यासम्भव एवेति ।

मोहनीयस्य संख्येयगुणवृद्धेर्जघन्यकाल ओघे षट्चत्वारिंशद् मार्गणासु च समयः, सामान्यतो वृद्धिहानिबन्धप्रवर्तनानन्तरमवस्थितबन्धस्य प्रवर्तनात् । उत्कृष्टकालस्त्वोघे समयद्वयम् , तद्यथा–यदा श्रेणितोऽवरोहन्नेकां संज्वलनलोभलक्षणां प्रकृतिं बध्नन् संज्वलनमायालोभलक्षणं प्रकृतिद्वयं बध्नाति, तस्मिन् क्षण एव निधनं प्राप्य स्वर्गे समुत्पद्य तत्प्रथमसमये सप्तदश मोहनीयप्रकृतीर्बध्नाति तदा समयद्वयं संख्येयगुणवृद्धिबन्धकालः प्राप्यते । आदेशतः पुनर्यासु श्रेणौ एक द्व्यादिबन्धस्थानानां सम्भवस्तत्र च मरणप्राप्तौ दिवि समुत्पादेऽपि विवक्षितमार्गणानामविच्छेदस्तासु मोहनीयस्य संख्येयगुणवृद्धेर्ज्येष्ठकालः समयद्वयं भवति, ता मार्गणा नामत इमाः-पञ्चेन्द्रियौघ-तत्पर्याप्त त्रसकायौघ-तत्पर्याप्त-काययोगौघ-लोभ मतिश्रुता-वधिज्ञानचक्षुरचक्षुरवधिदर्शन-शुक्ललेश्या- भव्य-सम्यक्त्वौघोपशमक्षायिकसंज्ञ्याहारकमार्गणा नवदशेति ।

यासु मार्गणासु पुनः श्रेणेरसम्भवः, यद्वा तस्य सद्भावेऽपि तत्र मरणानन्तरं प्रस्तुतमार्गणाया विच्छेदः, उत एकप्रकृत्यात्मकं प्रकृतिद्वयात्मकं च बन्धस्थाने न स्तः, तासु संख्येयगुणवृद्धेर्ज्येष्ठकालः समयः, तत्र त्रिमनुष्य-मनोयोगौघ-तदुत्तरभेदचतुष्क-वचनयोगौघ-तदुत्तरभेदचतुष्कौ-दारिकयोग-स्त्रीनपुंसकवेदा-पगतवेद-मनःपर्यवज्ञान-संयमौघ सामायिक च्छेदोपस्थापनीय-तेजःपद्मलेश्यामार्गणाश्चेति त्रयोविंशतिः, तासु स्वस्थान एव संख्येयगुणवृद्धिर्भवति, न पुनर्मरणानन्तरं तस्याः सम्भवः, स्त्रीनपुंसकवेदौ तेजःपद्मलेश्ये अपगतवेदं च विमुच्य अष्टादशमार्गणासु श्रेणितोऽवरोहन् यद्वा संयमतः प्रपतन् द्वितीयगुणं प्रथमं वा गुणस्थानं प्राप्तः संख्येयगुणवृद्धिं समयमेकं करोति । अपगतवेदे तु श्रेणितोऽवरोहापेक्षयैव, तेजःपद्मलेश्ययोः स्त्रीनपुंसकयोश्च तु संयमतः प्रपतन्तमपेक्ष्यैव समयप्रमाणः प्रस्तुतकालः प्राप्यते ।

पुरुषवेदे कषायत्रये च श्रेणेः सद्भावेऽपि ततः कालकरणानन्तरं मार्गणाया अवस्थानस्य लाभेऽप्येकप्रकृत्यात्मकबन्धस्थानस्याभावात् श्रेणौ स्वस्थानापेक्षया संख्येयगुणवृद्धिर्नैव प्राप्यते, अत उक्तमार्गणाचतुष्के श्रेणौ यथासम्भवं पञ्चान्तबन्धं विधाय मरणेन सप्तदश प्राप्तः यद्वा संयमात् प्रपतन् षष्ठगुणात् प्रथमं द्वितीयं वा गुणं प्राप्तः समयमेकं संख्येयगुणवृद्धिं करोति, न पुनस्तदुत्तरसमये स संख्येयगुणवृद्धिं कर्तुं क्षमः । इत्येकजीवापेक्षया मोहनीयनाम्नोः संख्येयगुणवृद्धिहान्योर्जघन्योत्कृष्टकालनिरूपणम् ।।४१५-४१७।।

## ॥ द्वितीयाधिकारसत्कनवमादिद्वाराणामशुद्धि-विशोधनम् ॥

| पृष्ठम् | पङ्क्तिः | अशुद्धिः | विशुद्धिः |
|---|---|---|---|
| २ | १५ | (गीतिः | (गीति·) |
| २ | १७ | कांष्ट | काष्टा |
| २ | १८ | मिथ्य | मिथ्या |
| २ | २३ | क्षेत्रं अत्र | क्षेत्रमत्र |
| ३ | १ | स्थानाख्ये | |
| ४ | १२ | क्षेत्रं प | क्षेत्रमे |
| ४ | २३ | मागणा | मार्गणा |
| ५ | २० | एवं औ | एवमौ |
| ६ | १२ | यपु | येषु |
| ६ | १७ | तिरञ्चो | तिर्यञ्चो |
| ६ | २२ | षड्वि | षड्विं |
| ६ | २३ | थानानि | स्थानानि |
| ७ | १४ | द्वूंय | द्वयं |
| ८ | १ | बन्धो | बधो |
| ८ | १५ | मुर्ध्वे | मूर्ध्वे |
| ८ | २१ | गौघ | गोघ |
| ९ | ११ | केषूत्पि | क त्त्पि |
| ११ | ३ | तियेक | तिर्यक् |
| ११ | १३ | वंति | र्वति |
| ११ | २१ | आनादिपु | आनतादिपु |
| १३ | २१ | षष्ट | षड् |
| १४ | २८ | रश्चोऽऽ | रश्च आ |
| १५ | ११ | स्या | स्याः |
| १५ | १७ | स्यादि | इत्यादि |
| १५ | १९ | षष्ट | षष्ठ |
| १५ | २२ | नाधि | नधि |
| १५ | २२ | देश | दश |
| १५ | २३ | पष्टे, | पष्टेः |
| १६ | २१ | नानां २ | नानासु |
| १७ | ६ | शत प | शत्प |
| २० | १७ | सूना | स्सूना |
| २० | १७ | दनीनां | दनिनां |
| २० | १८ | तद् वि | तद्वि |
| २० | १८ | यावति | यावती |
| २० | २० | शेषासु | शेषासु |
| २१ | १० | पच | पच |
| २१ | २२ | प्र० | प्रे० |
| २२ | १३ | अत वि | अतस्ति |
| २३ | १२ | नम | नाम |
| २३ | १७ | षष्टिबन्ध | षष्टेर्बन्ध |
| २५ | २० | विशति | विंशति |
| २६ | १ | घदामि। | घादिमा |
| २८ | १६ | ७० ७१ | ७०-७१ |
| २८ | २३ | त्रिषष्टे, | त्रिषष्टेः, |
| २९ | २ | मुंहूर्त | मुहूर्तं |
| २९ | ५ | सार्व | सर्व |
| २९ | १८ | मूहू | मुंहू |
| ३० | ११ | षष्ठे | षष्टे |
| ३१ | २५ | समुदीता | समुदिता |
| ३२ | १ | बधो | बधो |
| ३२ | २३ | प्र | प्रे |
| ३३ | २ | तस्मि | तस्मिं |
| ३३ | २७ | समयः प्र | समयप्र |
| ३४ | १ | बधो | बंधो |
| ३४ | ७ | एवः | एव |
| ३५ | २ | प्र | प्रे० |
| ३५ | ५ | बध्नन्तीनां | बध्नतीनां |
| ३५ | १६ | कालस्या | कालकोऽ |
| ४१ | १ | दश | दशं |
| ४१ | १५-१८ | मुहूर्त | मुंहूर्त |
| ४२ | १६ | हृस्म | हृस्सो |
| ४७ | ११ | पयिपु | पयिपु. |
| ४७ | २० | पी मा | पीमा |
| ५० | २२ | सव्वेसु | सव्वेसु |
| ५२ | ४ | यान्तं | यान्तरं |
| ५३ | ८ | स्यादि | इत्यादि |
| ५४ | ३ | १४७ | १४६-१४७ |
| ५५ | १६ | द्वेयः | द्वेयम |

एतैर्मनीषिभिरेषा संशोधिता कृपापरैः ।
भवत्वध्ययनाद्यंगैः भव्यलोकस्य मुक्तिदा ॥११॥

यदत्र किञ्चिदुत्सूत्रं ग्रथितं वा विपश्चितम् ।
मिथ्यादुष्कृतमेतस्य क्षाम्यन्तु तन्मनीषिणः ॥१२॥

---

# द्रव्यप्रदायकप्रशस्तिः

अस्ति समस्तदेशतिलकायमाने संख्यातीतजिनमंदिरसमलङ्कृते मरुदेशे चडचालाभिधं नगरम् । यत्र चेलाजीनामा सुश्रावको जिनधर्मसुवासितान्तःकरणो निवसति स्म नित्यं जिन-पूजा-गुरुवन्दन-सप्तक्षेत्रद्रव्यवपनादिसुकृतगणेनानर्गलं पुण्यमुपार्जयन् । मृत्युकाले च विषण्ण-वदनं तं दृष्ट्वा स्वपुत्रैरपृच्छि विषादकारणम् , तदा स्वमनोगतं शत्रुञ्जयसंघयात्रामनोरथमपूर्ण-मद्यावधि प्राचिकटत् । पुत्ररत्नैश्च भूयो भूयः वयं तदवश्यं पूरयिष्याम इति विश्वासं ग्राहितः समाधिना स्वर्गं जगाम । ततः बाबुभाई-भैयाजी नवलमल-अशोकादि सुपुत्रैः महोत्सवपूर्वकं श्रीमत्प्रेमसूरीश्वराणां शुभनिश्रामासाद्य श्रीशत्रुञ्जयतीर्थसंघयात्रां कृत्वात्मानं पावनं चक्रुः पितु-र्मनोरथं च सफलमकुर्वन् । तदनन्तरं चान्यान्यपि भूरि सुकृतानि स्वभुजोपार्जितेन द्रव्येण समर्जितानि । इमं च 'उत्तरप्रकृतिबन्ध'तृतीयांशग्रन्थमपि स्वकीयद्रव्यव्ययेन मुद्रापयित्वा तैरेवाधुना कोल्हापुरनगरनिवासिभिः यत् पुण्यमर्जितं तदनाख्येयमन्येषामपि सुकृतादिषूत्साह-प्रदायकमित्यत्र नास्ति विवादः । तदेवं तेषां श्रुतभक्त्या प्रकाशं प्राप्तोऽयं ग्रन्थः चिरं जयतु ।

शुभं भूयात् श्रीसंघस्य ।
जैनं जयति शासनम् ॥



## ॥ द्वितीयाधिकारमस्कनवमाद्धाराणामशुद्धि-विशोधनम् ॥

| पृष्ठम् | पङ्क्तिः | अशुद्धिः | विशुद्धिः | पृष्ठम् | पङ्क्तिः | अशुद्धिः | विशुद्धिः |
|---|---|---|---|---|---|---|---|
| २ | १५ | (गीतिः | (गीतिः) | २० | २० | गेयासु | गेयासु |
| २ | १७ | काट्ठ | काष्ठा | २१ | १० | पच | पंच |
| २ | १८ | मिध्य | मिथ्या | २१ | २२ | प्र० | प्रे० |
| २ | २३ | क्षेत्रं अत्र | क्षेत्रमत्र | २२ | १३ | अत ति | अतस्ति |
| ३ | १ | स्थानाख्ये | | २३ | १२ | नम | नाम |
| ४ | १२ | क्षेत्रं ए | क्षेत्रमे | २३ | १७ | पष्टिवन्व | पष्टेर्बन्व |
| ४ | २३ | मागणा | मार्गणा | २५ | २० | विशति | विंशति |
| ५ | २० | एवं ओ | एवमो | २६ | १ | वदामि । | वादिमा |
| ६ | १२ | यषु | येषु | २८ | १६ | ७० ७१ | ७०-७१ |
| ६ | १७ | तिरञ्चो | तिर्यञ्चो | २८ | २२ | त्रिपष्टे, | त्रिपष्टेः, |
| ६ | २२ | पड्वि | पड्विं | २९ | २ | मुं हूर्तं | मुहूर्तं |
| ६ | २३ | थानानि | स्थानानि | २९ | ५ | सार्वं | सर्वं |
| ७ | १४ | दूंयं | दूयं | २९ | १८ | मूहू | मुंहू |
| ८ | १ | बन्धो | बंधो | ३० | ११ | पष्टे | पष्टे |
| ८ | १५ | मुर्ध्वे | मूर्ध्वे | ३१ | १५ | समुद्दीता | समुदिता |
| ८ | २१ | गोच | गोच | ३२ | १ | बधो | बधो |
| ९ | ११ | केपृत्पि | क वृत्पि | ३२ | २३ | प्र | प्रे |
| ११ | ३ | निर्यक | तिर्यक् | ३३ | २ | तस्मि | तस्मिं |
| ११ | १३ | वंति | वंतिं | ३३ | १७ | समयः प्र | समयप्र |
| ११ | २१ | आनादिपु | आनतादिपु | ३४ | १ | बधो | बंधो |
| १३ | २१ | पट्ट | पड् | ३४ | ७ | एवः | एव |
| १४ | २८ | रश्चोऽऽ | रश्च आ | ३५ | २ | प्र | प्रे० |
| १५ | ११ | स्या | स्याः | ३५ | ५ | बध्नन्तीनां | बध्नतीनां |
| १५ | १७ | त्यादि | इत्यादि | ३५ | १६ | कालत्या | कालकोऽ |
| १५ | १९ | पट्ट | पट्ठ | ४१ | १ | दश | दशं |
| १५ | २२ | नाधि | नधि | ४१ | १५-१८ | मुहुर्तं | मुंहूर्तं |
| १५ | २२ | देश | दश | ४२ | १६ | ह्रस्म | ह्रस्सो |
| १५ | २३ | पष्टे, | पष्टेः | ४७ | ११ | पयिपु | पयिपुः |
| १६ | २१ | नानां ३ | नानामु | ४७ | २० | पी मा | पीमा |
| १७ | ६ | शत प | शतप | ५० | २२ | सव्वेसुं | सव्वेसु |
| २० | १७ | सूना | रसूना | ५२ | ४ | यान्तं | यान्तरं |
| २० | १७ | दनीनां | दनिनां | ५३ | ८ | त्यादि | इत्यादि |
| २० | १८ | तद्द वि | तद्वि | ५४ | ३ | १४७ | १४६-१४७ |
| २० | १८ | यावति | यावती | ५४ | १६ | ज्ञेयः | ज्ञेयम् |

## अशुद्धि-विशोधनम्

| पृष्ठम् | पङ्क्तिः | अशुद्धिः | विशुद्धिः |
|---|---|---|---|
| ६० | २३ | दर्शितम् । मिति । | मिति दर्शितम् । |
| ६१ | १६ | कोन | रेकोन |
| ६३ | १२ | तामेव | वतामेव |
| ६३ | १७ | (प्र०) | (प्रे०) |
| ६४ | २ | काम | कामो |
| ६५ | २५ | सख्यये | संख्येय |
| ६५ | २६-३० | मितानां अ | मितानाम- |
| ६६ | २७ | गुणा, | गुणाः, |
| ७० | १२ | गुणाः | गुणाः, |
| ७० | १३ | का सं | काः सं |
| ७० | १३ | बन्धका | बन्धकाः |
| ७१ | १२ | व्या | व्याः |
| ७१ | १६ | बन्धका | बन्धकाः |
| ७१ | १७ | भवन्ति | भवन्ति, |
| ७१ | १८ | विशेषः | |
| ७१ | १६ | इति | इति विशेषः |
| ७२ | ३ | दारभ्यः | दारभ्य |
| ७२ | १९ | हीना | हीनाः |
| ७२ | २० | सेया, | सेयाः, |
| ७२ | २१ | जीवा | जीवाः |
| ७३ | २ | बन्धका | बन्धकाः |
| ७७ | २६ | जीवा | जीवाः |
| ७६ | १७ | संख्ये | संख्येय |
| ७९ | १६ | श्रता | श्रुता |
| ८४ | १६ | २२९ | २२८ |
| ८४ | १८ | हवज्ज | हवेज्ज |
| ८५ | ४ | दशंने | दर्शने |
| ८५ | ६ | ३३० | २३० |
| ८५ | ८ | भवन्ति | भवति |
| ८५ | १७ | का तुल्याः | कास्तुल्याः |
| ८५ | २६ | तेऊए | तेऊअ |
| ८७ | २ | एवव | एव व |
| ८८ | १७ | गुणा. जीवा; | गुणा जीवाः |



# तृतीयाद्यधिकारस्य अशुद्धि-विशोधनम्

| पृष्ठम् | पङ्क्तिः | अशुद्धिः | विशुद्धिः |
|---|---|---|---|
| २ | २५ | चस्रगसे | चउरस्से |
| ६ | २१ | मनुष्यग | मनुष्य |
| ७ | ५ | विंशति- | विंशतिः |
| ९ | १४ | त्रिणि | त्रीणि |
| १० | १७-२२-२७ | दर्शा | दर्श |
| ११ | २ | दर्शा | दर्श |
| १२ | ७ | व्यंतर | व्यन्तर |
| १२ | २८ | शुक्ल | १ शुक्ल |
| १२ | २९ | अभव्य | ३ अभव्य |
| १५ | ७ | साधिकाणि | साधिकानि |
| १५ | ९ | देशोना | देशोना |
| १५ | २४ | काया चेति | कायश्चेति |
| १६ | १६ | कपें | कर्पे |
| १६ | २४ | मुहूर्तं | मुहूर्त |
| १७ | ९ | पल्लेश्या | पद्मलेश्या |
| १७ | २६ | स्थिति | स्थित |
| १७ | २७ | पुनः ते | पुनस्ते |
| २० | ३ | नोऽऽ | न आ |
| २० | १९ | कृतया | कृताया |
| २८ | १४ | स्वामित्व | स्वामित्व |
| २९ | १० | युपो नि | युर्नि |
| २९ | १० | नाम | नामा |
| २९ | २३ | गौघ | गोघ |
| ३३ | १९ | ज्ञेया | ज्ञेयाः |
| ३९ | १ | बंध | बन्ध |
| ४० | १ | १४० | ४० |
| ४२ | १७ | केवलं औ | केवलमौ |
| ४३ | ३ | गोत्रणाम् | गोत्राणम् |
| ४४ | १ | बन्धो | बंधो |
| ४५ | १८ | त्वोघ | त्वौघ |
| ४७ | ३-९ | अत | अन्त |
| ४७ | १२ | मोहनीययोः | मोहनीयस्य |
| ५१ | ६ | नवपर्यवसानाः | नवपर्यवसाना |
| ५३ | ४ | तमस्मा | तमा |
| ५३ | ११ | वृति | वृत्ति |
| ५५ | ७ | क्षयो | क्षायो |
| ५५ | २८ | येऽऽहार | य आहार |
| ५७ | १७ | गत्यौघे· | गत्योघे- |
| | | एकेन्द्रियोघे | एकेन्द्रियौघे |
| ५९ | १ | योकृष्ट | योत्कृष्ट |
| ६० | १५ | मुहूर्तम | मुहूर्तम् |
| ६१ | १ | मवस्थित | वस्थित |
| ६३ | १ | म्वस्थित | रवस्थित |
| ६४ | २० | तदेव | तमेव |
| ६५ | ६ | ६९ | ७१ |
| ६५ | ९ | ७० | ७२ इत्येवमत आरभ्य प्रत्येकगाथाङ्के द्विसङ्ख्याया वृद्धिर्ज्ञातव्या |
| ७२ | २२ | तस्या | तस्याः |
| ७३ | १० | दर्शितं, | दर्शितम् , |
| ७६ | २६ | न्तं | न्तरं |
| ८४ | १ | नाम्नोः | नाम्नो |
| ८४ | ११ | नाम्नोर | नाम्नोऽ |
| ८४ | २६ | तमपे० | तस्याऽपे० |
| ८५ | २३ | माण्येव | मान्येव |
| ८५ | २३ | पमाणि | पमानि |
| ८६ | ३ | द्वाविंशतितमे | |
| ८६ | ५ | व्यतित्य | व्यतीत्य |
| ८६ | १५ | च्छद्मा | छद्म |
| ८६ | २४ | जिननाम | जिननामा |
| ८६ | २९ | तमपेक्षयाऽ | तमपेक्ष्याऽ |
| ८९ | १० | संयोजा | संयोगजा |
| ८९ | २५ | ताविज्ञेयाः | ता विज्ञेयाः |
| ८९ | २५ | सबधि | संबन्धि |
| ९१ | १२ | मार्गणा- | मार्गणा |
| ९१ | १७ | चतसृपु | चतसृपु |

| पृष्ठम् | पङ्क्तिः | अशुद्धिः | विशुद्धिः |
|---|---|---|---|
| ६२ | २६ | नियानि | नीयानि |
| ६४ | २ | त्रिंशतौ | त्रिंशति |
| ९६ | १८-१९ | मागो-स्य | माग-स्यो |
| ९७ | ७ | पदेऽऽ | पद आ |
| ९७ | १३ | नाय्या | न्याय्या |
| ९७ | ३० | ३ | १३ |
| ९८ | २१ | लमेकमे | लमेक ए |
| १०४ | २८ | बन्धका | बन्धकाः |
| १०६ | २८ | रज्जवः, | रज्जवः |
| १०६ | २९ | स्पृष्टा | स्पृष्टाः |
| १०७ | १० | याणा | पायां |
| १०९ | १ | तोऽऽ | त आ |
| १०९ | २ | तत्वं | तत्त्वं |
| १०९ | १२ | । | य । |
| १०९ | २१ | जघन्य | जघन्यत |
| १०९ | २१ | प्रपपता | प्रपतता- |
| १११ | ४-१९ | कारल्प | काराऽल्प |
| ११२ | २० | त्रिंशतौ | त्रिंशति |
| ११४ | ८ | भेद-च | भेदच |
| ११४ | १३ | त्वष्त्वक | त्वेष्वेक |
| ११६ | १० | ऽसह्वये | ऽसह्वये य |
| ११६ | ११ | लोका | लोक |
| ११६ | २० | ऽसह्वये | ऽसह्वये य |
| ११८ | १ | नाम्नो | नाम्नो |
| १२० | ४ | यन्त | यन्तः |
| १२३ | २० | कार | का र |
| १२४ | ६ | स्थानकं | स्थानकस्य |
| १२५ | २२ | षान | शान |
| १२७ | ५ | सहस्रार | सहस्रारं |
| १२७ | ६ | माव | मावा |
| १२८ | २ | स्थना | स्थाना |
| १२९ | २ | तु | अन्यथा तु |
| १२९ | ८ | पयडिबंधे | प्रकृतिबन्धे |
| १३३ | १८ | विवृत्ता | विवृता |
| १३५ | ७ | (प्र०) | (प्रे०) |
| १४० | ११ | वोद | वौद |
| १४२ | १ | निर्वर्तक | निर्वर्तक |
| १४२ | २२ | पदानां ओ | पदानामो |
| १४३ | ५ | दर्शणा | दर्शना |
| १४३ | १९ | कास्तो- | स्तोका- |
| १४४ | २२ | १०६ | १९६ |
| १४५ | १ | भूयस्कारादि | |
| १५० | १६ | द्वेव | देव |
| १५३ | २ | सप्तदशेभ्यो नवदशेभ्यश्च | सप्तदशभ्यो नवदशभ्यश्च |
| १५३ | २ | द्वादशेभ्यो | द्वादशभ्यो |
| १५३ | ३ | विंशतिते | विंशते |
| १५३ | २८ | नं एका | नमेका |
| १५३ | २९ | वर्जेष | वर्जपे |
| १५४ | ५ | भ्य | भ्यो |
| १५४ | १९ | याष्ट | यष्टा |
| १५६ | ७ | पसप्र | सप्रप |
| १५८ | २ | तमत् | तमं |
| १६२ | ४ | भ्योऽऽ | भ्य आ |
| १६२ | ५ | मेना | मेणाऽ |
| १६५ | २६ | द्वादशानि | द्वादश |
| १६६ | २८ | त्यादि | इत्यादि |
| १६७ | १ | मित्व | मित्वम् |
| १६७ | २ | रम्भेना | रम्भेणा |
| १७१ | १९ | चतुःषष्टे | चतुःषष्टेः |
| १८० | ५ | किञ्चत्र | किञ्चाऽत्र |
| १८४ | १४ | सयोगी | सयोगि |
| १८४ | २९ | पञ्चक | पञ्चके |
| १८५ | २० | तस्मिं चा | तस्मिंश्चा |
| १८६ | १ | स्वचा | स्वच |
| १८६ | २८ | सामयिका | सामायिक |
| १८८ | १४ | सिद्धावेति | सिद्धा वेति |
| १८९ | १० | जीरपि | जीवैरपि |
| १९४ | ६ | सप्तम | सप्तमं |
| १९५ | ८ | मानुपीणी | मानुषी |
| १९८ | २ | दिस्वा | दिष्वा |
| २०२ | २ | रकनाहारका | रकाऽनाहारक |

# शुद्धिपत्रकम्

| पृष्ठम् | पङ्क्तिः | अशुद्धिः | विशुद्धिः |
|---|---|---|---|
| २०२ | ९ | ञ्चेन्िद्रय | ञ्चेन्द्रिय |
| २०३ | ९ | द्वारनि | द्वारं नि |
| २०५ | ४ | बन्धका | बन्धकाः |
| २०६ | २८ | भूर्ये | भूर्य |
| २०८ | ८ | शं अ | शम |
| २१० | ३ | अस्मिञ्च | अस्मिंश्च |
| २१० | ५ | रैद | रैर्द |
| २१२ | २२ | तस्यो | तस्यौ |
| २१३ | २० | सो | स |
| २१४ | ८ | प्रारमतो | प्रारममाणस्य |
| २१५ | १५ | बस्धं | बन्धं |
| २१६ | ९ | ह्यान्य | ह्यान्यव |
| २१७-१९-२१ २२३-२५-२७१ २२९-३१ | | वृद्ध्यधिकारे | पदनिक्षेपाधिकारे |
| २१८ | १५ | योग्य | योग्या |
| २१९ | २७ | निरुपितम् | निरूपितम् |
| २२१ | २ | ते | ये |
| २२१ | १० | श्चः | श्च |
| २२३ | २० | नञ्च | नंश्च |
| २२५ | ७ | पयतानि | पर्यन्तानि |
| २२६ | ६ | षान | शान |
| २२६ | ९ | स्त्रिंश | स्त्रिंशत |
| २२७ | १४ | प्राप्यत | प्राप्यते |
| २२८ | २ | ताबा | ताव |
| २३० | ५-६ | प्राप्यमाणान | प्राप्नुवतोऽ |
| २३२ | ११ | ह्यार्या, | ह्यार्याः, |
| २३३ | ११ | गतोऽऽ | गत आ |
| २३३ | १२ | न्यूत्वा | च्युत्वा |
| २३४ | ४ | सम्य | सम्यग् |
| २३४ | २१ | निरु | निरू |
| २३५ | २-३ | निरु | निरू |
| २३५ | ६ | प्ररु | प्ररू |
| २३५ | १३ | स्तोकाः, | स्तोका, |
| २३६ | ४ | र्थेउ | र्थेषु |
| २३६ | ९ | यस्थाने | यत्रस्थाने |
| २३८ | १६ | योग | योगा |
| २३८ | २० | निसृषु | तिसृषु |
| २३९ | ७ | हितानी | हीतानी |
| २३९ | १७ | प्रकारा | प्रकाराः |
| २३९ | १८ | या त | यास्त |
| २३९ | २४ | पयडि | प्रकृति |
| २४२ | ४ | पन्ना | पन्नाः |
| २४५ | ९-१० | तिर्यग | तिर्यङ् |
| २४६ | २६ | नीस्तः | नी स्तः |
| २४८ | २२ | चतुर्थ | चतुर्थं |
| २४९ | २१ | दशे | दश |
| २५० | २१ | णाकृताम् | णा कृता |
| २५१ | १८ | कषाद | कषाय |
| २५१ | २२ | द्वितिय | द्वितीय |
| २५१ | २४ | यपेक्षा | पेक्षया |
| २५१ | २८ | वागुणं | वा गुणं |
| २५३ | १ | प्ररु | प्ररू |
| २५४ | १२ | तरं | तरत् |
| २५४ | २५ | च्यूत्वा | च्युत्वा |
| २५४ | २५ | तरं | तरत् |
| २५५ | १ | तोऽऽ | त आ |
| २५६ | २ | नक | नके |
| २५८ | १४ | प्राप्त्या | प्राप्त्य |
| २५९ | ७ | णात्रसु | णासु |
| २६१ | २६ | मङ्गा | मङ्गा |
| २६२ | ८ | शितिः | शीतिः |
| २६३ | १८ | घेऽऽ | घ आ |
| २६४ | १६ | प्रमिता | प्रमिते |
| २६६ | २ | दशह्रो | दशाऽह्रो |
| २६६ | २ | प्राप्यमाणानां | प्राप्नुवतां |
| २६६ | २७ | संख्यय | संख्येय |
| २६७ | ४ | ५३६ | ४३६ |
| २६७ | ७ | तरं ओवे | तरमोघे |
| २६८ | ७ | प्रारमे | प्रारम्भे |
| २६८ | २१ | वन् प्र | नत्र |

| पृष्ठम् | पङ्क्तिः | अशुद्धिः | विशुद्धिः |
|---|---|---|---|
| २६९ | १४ | पतिः | पत्तिः |
| २७० | १२ | च्यूत्वा | च्युत्वा |
| २७० | १४ | बन्धका | बन्धकाः |
| २७० | २८ | गुणिता | गुणिताः |
| २७२ | ६ | मार्गण | मार्गणा |
| २७२ | ११ | यद्व यत | यद्यत् |
| २७२ | २७ | पतव्यम् | पत्तव्यम् |
| २७५ | १५ | प्राप्यमाणाम् | प्राप्नुवतः |
| २७६ | १५ | केभ्य | केभ्यः |
| २७६ | १४ | ग्रहण | ग्रहणं |
| २७९ | १६ | तद्वारं | तद्द्वारं |

---

भूयस्काराधिकारे (पृष्ट ५९) चतुषष्टिपञ्चषष्टिगाथाद्वयवृत्तौ यन्त्रके बादरतेजस्कायानन्तरं निम्नलिखितं स्थापनीयम्

| | | | | |
|---|---|---|---|---|
| ५९ | १५-१६ | बे. ते. चतु. ओघ | क्षुल्लकभवः | संख्येयवर्षसहस्राणि |
| | | पञ्चे. ओघ | " | सातिरेकसागरोपमसहस्राणि |
| | | त्रस० ओघ | " | सातिरेकसागरोपमसहस्रद्वयम् |
| | | पर्या. बे. | अंतर्मु० | संख्येयवर्षाणि |
| | | पर्या. ते | " | संख्येयाहोरात्राणि |
| | | पर्या. चतु. | " | संख्येयमासा मतांतरेण तिसृष्वपि संख्येयवर्षसहस्राणि |
| | | पर्याप्तपञ्चे. | " | सागरोपमशतपृथक्त्वं सातिरेकं |
| | | पर्याप्तत्रसकाय | " | सागरोपमशतपृथक्त्वं सातिरेकं मतांतरेण सागरोपमसहस्रद्वयम् |

